## अभ्यासाः **सामान्यतत्पुरुषः – १** (प्रथमातत्पुरुषः, द्वितीयातत्पुरुषः, तृतीयातत्पुरुषः)

1. मध्याह्ने सूर्यस्य आतपः तीक्ष्णः। मध्याह्ने – मध्यम् अह्नः। तस्मिन्। (प्रथमातत्पुरुषः)

2. तस्य अधरकायस्य स्नसाः (muscles) बृहत्यः सन्ति। अधरकायस्य – अधरं कायस्य। तस्य। (प्रथमातत्पुरुषः)

3. गर्तपतिता बालिका उच्चैः नर्दति (shouts)। गर्तपतिता – गर्तं पतिता। (द्वितीयातत्पुरुषः)

4. कार्यालयप्राप्तः कर्मकरः कार्यम् अकरोत्। कार्यालयप्राप्तः – कार्यालयं प्राप्तः। (द्वितीयातत्पुरुषः)

5. छात्राः व्यासरचितम् महाभारतं पठन्ति। व्यासरचितम् – व्यासेन रचितम्। (तृतीयातत्पुरुषः)

6. रोगतप्तः औषधं स्वीकरोति। रोगतप्तः – रोगेण तप्तः। (तृतीयातत्पुरुषः)

१. मातृसदृशी शिक्षिका छात्रान् पाठयति। मातृसदृशी – मात्रा सदृशी। (तृतीयातत्पुरुषः)

२. दुर्योधनः अहं युधिष्ठिरं अर्धराज्यं न दास्यामि इति उक्तवान्। अर्धराज्यं – अर्धं राज्यस्य। (प्रथमातत्पुरुषः)

३. हरित्रातः भक्तः नमस्कृतवान्। हरित्रातः – हरिणा त्रातः। (तृतीयातत्पुरुषः)

४. रामश्रितः भक्तः सन्तुष्टः अभवत्। रामश्रितः – रामं श्रितः। (द्वितीयातत्पुरुषः)

५. पुत्रसमः छात्रः गुरुं नमति। पुत्रसमः – पुत्रेण समः। (तृतीयातत्पुरुषः)

६. गृहगता बालिका भोजनम् अकरोत्। गृहगता – गृहं गता। (द्वितीयातत्पुरुषः)

७. पुत्रीप्राप्तं पारितोषिकं माता च पिता च अभिनन्दतः। पुत्रीप्राप्तम् – पुत्र्या प्राप्तम्। (तृतीयातत्पुरुषः)

८. सम्मर्दे लोकयाने सा अर्धासने उपविष्टवती। अर्धआसने – अर्धम् आसनस्य। तस्मिन्। (प्रथमातत्पुरुषः)

९. अनुजा शालाप्राप्ताभिः सखीभिः सह क्रीडति। शालाप्राप्ताभिः – शालां प्राप्ता। ताभिः। (द्वितीयातत्पुरुषः)

१०. उत्तमः बालकः गृहपाठं पूर्वाह्णे एव कृतवान्। पूर्वाह्णे – पूर्वम् अह्नः। तस्मिन्। (प्रथमातत्पुरुषः)

११.  तारकः ब्रह्मदत्तेन वरेण देवान् पराजितवान्।      ब्रह्मदत्तेन – ब्रह्मणा दत्तम्।  तेन।  (तृतीयातत्पुरुषः)

१२.  प्रेमपूर्णे परिसरे संभाषणस्य अभ्यासं करवाम।      प्रेमपूर्णे – प्रेमेण पूर्णः।  तस्मिन्।  (तृतीयातत्पुरुषः)

१३.  चोराः मध्यरात्रे आगच्छन्ति।      मध्यरात्रे – मध्यं रात्रेः।  तस्मिन्।  (प्रथमातत्पुरुषः)

१४.  कष्टातीतस्य जनस्य सुखं मधुरतरं भाति।      कष्टातीतस्य – कष्टम् अतीतः।  तस्य।  (द्वितीयातत्पुरुषः)

१५.  विषादयुक्तः अर्जुनः युद्धं कर्तुं नोत्सहते।      विषादयुक्तः – विषादेन युक्तः।  (तृतीयातत्पुरुषः)

१६..  नगरप्राप्तः ग्रामीणः विस्मयान्वितोऽभवत्।      नगरप्राप्तः – नगरं प्राप्तः।   (द्वितीयातत्पुरुषः)
विस्मयान्वितः – विस्मयेन अन्वितः।  (तृतीयातत्पुरुषः)

१७.  अपराह्णे वयं क्रीडाम।      अपराह्णे – अपरम् अह्नः।  तस्मिन्।  (प्रथमातत्पुरुषः)

१८.  संशयापन्ना छात्रा अध्यापकं पृष्टवती।      संशयापन्ना – संशयम् आपन्ना।  (द्वितीयातत्पुरुषः)

१९.  लक्ष्मणप्रयुक्तः बाणः मेघनादं व्यदारयत्।      लक्ष्मणप्रयुक्तः – लक्ष्मणेन प्रयुक्तः।  (तृतीयातत्पुरुषः)

२०.  सीता रामस्य प्राणसमा आसीत्।      प्राणसमा – प्राणैः समा।  (तृतीयातत्पुरुषः)

२१.  मध्याह्नस्य भोजनं सम्यगासीत्।      मध्याह्नस्य – मध्यम् अह्नः।  तस्य।  (प्रथमातत्पुरुषः)

२२.  सर्वाः महिलाः मातृसदृश्यः माननीयाः।      मातृसदृश्यः – मात्रा सदृशी।  ताः।  (तृतीयातत्पुरुषः)

२३.  विद्याविहीनः पशुः इति सुभाषितं सूचयति।      विद्याविहीनः – विद्यया विहीनः।  (तृतीयातत्पुरुषः)

२४.  रज्जुबद्धान् काष्ठान् ग्रामम् आनय।      रज्जुबद्धान् – रज्जवा बद्धः।  तान्।  (तृतीयातत्पुरुषः)

२५.  सीतानुगतः रामः वनं प्राविशत्।      सीताम् अनुगतः – द्वितीयातत्पुरुषः

२६.  लक्ष्मीसहिताय नारायणाय नमः।      लक्ष्मीसहितः – लक्ष्म्या सहितः।  तस्मै।  (तृतीयातत्पुरुषः)

२७.  अर्जुनः युद्धे शिवदत्तस्य अस्त्रस्य प्रयोगं कृतवान्।      शिवेन दत्तम्।  तस्य।  (तृतीयातत्पुरुषः)

२८.  दुखातीता वृद्धा ततः निर्गता।      दुखातीता – दुःखम्  अतीता।  (द्वितीयातत्पुरुषः)

२९.  विष्णुप्रयुक्तं चक्रं राक्षसं समहरत्।      विष्णुना प्रयुक्तम्।  (तृतीयातत्पुरुषः)

३०.  दण्डताडितः सर्पः निर्गच्छति।      दण्डताडितः – दण्डेन ताडितः। (तृतीयातत्पुरुषः)